युवं दिवो बृहतो दक्षमाभूवं
गां न धुर्युप युञ्जाथे अपः।।[४६]
अस्मिन मन्त्रे ऋतावना शब्दस्य प्रयोगः सत्यं यः आचरति इत्यर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः मित्रावरूणौ देवतौ स्तः विराट् जगतीछन्दः निषादस्वरस्चास्ति

४७. आ वामृताय केशिनीनूषत मित्र
यत्र वरूण गातुमर्चथः।
अव त्मना सृजतं पिन्वतं धियो
युव विप्रस्य मन्मनामिरज्यथः।।[४७]
अस्मिन मन्त्रे ऋताय शब्दस्य प्रयोगः सत्य आचरणस्यर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः मित्रावरूणौ देवतौ स्तः जगती छन्दश्च निषादस्वरः अस्ति।

४८. युवां यज्ञैः प्रथमा गोभिरुञ्जत,
ऋतावाना मनसो न प्रयुक्तिषु ।
भरन्ति वां मन्मना संयता
गिरोऽदृप्यता मनसा रेवदाशाथे।।[४८]
अस्मिन मन्त्रे ऋतावना शब्दस्य प्रयोगः सत्य आचरणस्य सम्बन्ध रक्षति इति अर्थे जातः अस्ति।
अस्य मन्त्रस्य दीर्घतमा ऋषिः मित्रावरूणौ देवतौ स्तः निचृज्जगती छनदः निषाद्स्वरचास्ति

४९. युवं वस्त्राणि पीवसा वसाथे
युवोरच्छिद्रा मन्तवोह सर्गा।
अवातिरतम नृतानि विश्व
ऋतेन मित्रावरूणा सचेथे।।[४९]
अस्मिन मन्त्रे ऋतेन शब्दस्य प्रयोगः सत्यर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः मित्रावरूणौ देवतौ स्तः त्रिष्टुप छन्दः धैवतः स्वरः अस्ति।

५०. अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरूणा चिकेत।
गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नितारीत्।।[५०]
अस्मिन मन्त्रे ऋतं शब्दस्य प्रयोगः सत्यव्यवहारे इति अर्थे अभवत्।
मंत्रस्य दीर्घतमा ऋषि मित्रवरूणौ देवतौ स्तः विराट् त्रिण्टुप छन्दः, धैवतः स्वरस्चास्ति।

५१. पीपाय धेनुरदितिऋताय
जनाय मित्रावरूणा हविर्दे।
हिनोति यद्वां विदथे सपर्यन्त्य
रातहत्यो मानुषो न होता।।[५१]
अस्मिन मंत्रे ऋताय शब्दस्य प्रयोगः सत्यव्यवहारं यः प्राप्तवान इत्यर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः मित्रावरूणौ देवतौ स्तः त्रिष्टुप छन्दः, धैवतः स्वरस्चास्ति।

५२. प्र द्यावा यज्ञैः पृथिवी ऋतावृधा
मही स्तुषे विदथेषु प्रचेतसा।
देवेभिर्ये देवपुत्रे सुदंससेत्था
धिया वार्याणि प्रभुषतः।।[५२]
अस्मिन मन्त्रे ऋतावृधा शब्दस्य प्रयोगः कारणेन वर्धन् इति अर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः द्यावा पृथिव्यौ देवते स्तः विराट् छन्दः निषाद स्वरः अस्ति।

५३. ते हि धावापृथिवी विश्वशम्भुव
ऋतावरी रजसो धारयत्कवी।
सुजन्मनी धिषणे अन्तरीयतेदेवो
देवी धर्म्मना सुर्य्यः शुचिः।।[५३]
अस्मिन मन्त्रे ऋतावरी शब्दस्य प्रयोगः सत्यकारणेन युक्तः इति अर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः द्यावापृथिव्यौ देवते स्तः विराट् जगतीः छन्दः निषादस्वरस्चाशस्ति

५४. द्वादशारं नहि तज्जराय वर्वत्ति चक्रं परि द्यामृतस्य।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्व तस्थुः।।[५४]
अस्मिन मन्त्रे ऋतस्य शब्दस्य प्रयोगः सत्य कारणेन इति अर्थे अभवत्
मन्त्रस्य दीर्घतमा ऋषिः विश्वेदेवाः देवताः स्तः निचृदत्रिष्टुप छन्दः धैवतः स्वरः अस्ति

५५. को न्वत्र मरूतो मामहे वः प्र
यातन सरवींरच्छा सखायः
मन्मानि चित्रा अपिवातयन्त
एषां भूत न वेदा म ऋतानाम्।।[५५]

अस्मिन मन्त्रे ऋतानाम शब्दस्य प्रयोगः सत्य व्यवहार मध्ये अर्थे जातः अस्ति।
मन्त्रस्य आगस्तयः ऋषिः इन्द्र देवता अस्ति, निचृतृत्रिष्टुप छन्दः धैवतः स्वरः अस्ति।

५६. त्वे रायइन्द्र तोशतमाः
प्रणेतारः कस्य चिदृतायोः।
तेषुणो मरूतो मृळयन्तु ये
स्मा पुरा गातूयन्तीव देवाः।।[५६]
अस्मिन मन्त्रे ऋतायोः शब्दस्य प्रयोगः सत्यं इच्छति अस्मिन अर्थे अभवत्।
मन्त्रस्य अगस्त्य ऋषिः इन्द्र देवता अस्ति स्वराट् पङक्ति छन्दः पंचमः स्वरः अस्ति

५७. त्वाग्ने होत्रं तव पोत्रमृत्वियं
तव नेष्ट्रं त्वमग्निदृतायतः
तव प्रशास्त्रं त्वमध्वरीयसि
ब्रह्मा चासि गृहपतिश्च नो दमे।।[५७]
अस्मिन मन्त्रे ऋतायतः शब्दस्य प्रयोगः सत्ययस्य इच्छां यः करोति इति अर्थे अभवत्
मन्त्रस्य अङ्गिरसः शौनहोत्रो भार्गवो गृत्समद ऋषिः अग्दिवताश्चास्ति विराट जगती छन्दः निषादः स्वरः अस्ति।

५८. स्वः स्वाय धायसे
कृणुतामृत्विगृत्विजम्।
स्तोमं यज्ञं चादरं
वनेमा शरिमा वयम।।[५८]
प्रस्तुते मन्त्रे ऋत्विक् एवं ऋत्विजम शब्दौ आगतौ येषां प्रयोगः ऋतुनाम् अनुकूलं सर्वेषां व्यवहारानाम् प्राप्तिं कुर्वन तथा ऋत्विजम, अस्य प्रयोगः अनुकूल अर्थे अभवत
मन्त्रस्य सोमाहुति भार्गव ऋषिः अग्निदेवता भूरिगुष्णिक छन्दश्च निषादः स्वरः अस्ति।

५६. यस्मादिन्द्रादबृहतः किञ्चनेमृते
विश्वान्यस्मिन्त्संभृताधि वीर्य्या।
जठरे सोमं तन्वी सहो महो हस्ते
वज्रं भरति शीर्षणि क्रतुम।।[५६]

अस्मिन मन्त्रे ऋते शब्दस्य प्रयोगः विना, अर्थे अभवत

मन्त्रस्य गृत्समद ऋषिः इन्द्रदेवता अस्ति जगतीछन्दश्च निषादः स्वरः अस्ति

६०.बृहस्पते अति यदर्यो

अर्हाद्युमद्विभाति त्रतुमज्जनेषु।

यछीदयच्छवस ऋतप्रजात

तदस्मासु द्रविणं धेहि चित्रम्।।[६०]

अस्मिन मन्त्रे ऋत प्रजात, शब्दस्य प्रयोगः सत्याचरणे प्रकटः इति अर्थे अभवत

मन्त्रस्य गृत्समद ऋषिः बृहस्पति देवताः अस्ति भुरिक त्रिष्टुप छन्दः धैवतः स्वरः अस्ति,

६१. विश्वेभ्यो हित्वा भुवनेभ्यस्परि

त्वष्टजनत्साम्नः साम्नः कविः।

स ऋणचिछणया ब्रह्मणस्पतिर्द्रुहो

हन्ता मह ऋतस्य धर्त्तरि।।[६१]

अस्मिन मन्त्रे ऋतस्य शब्दस्य प्रयोगः सत्यकारणे अर्थे अभवत्

मन्त्रस्य गृत्समद ऋषिः ब्रह्मणस्पतिः देवता विद्यते भुरिक त्रिष्टुप छन्दश्च धैवतः स्वरः अस्ति।"

६२. धारयन्त आदित्यासो जगत्स्था

देवा विश्वस्य भुवनस्य गोपाः।

दीर्घाधियो रक्षमाणा असुर्यमृ

तावानश्चयमाना ऋणानि।।[६२]

अस्मिन मन्त्रे ऋतावानः शब्दस्य प्रयोगः सत्यं सेवति अर्थे अभवत्

मन्त्रस्य गृत्समद ऋषिः आदित्यो देवतो स्तः त्रिष्टुपछन्दः धैवतः स्वरः अस्ति"

६३. तिस्रो भूमीर्धारयन त्रींरूत

द्यून्त्रीणि व्रता विदथे अन्तरेषाम्।

ऋतेनादित्या महिवो महित्वं

तदर्य्यमन् वरूण मित्र चारू।।[६३]

अस्मिन मन्त्रे ऋतेन् शब्दस्य प्रयोगः सत्यस्वरूप ईश्वरं धारयन इति अर्थे अभवत्

मन्त्रस्य गृत्समदऋषिः देवता आदित्य अस्ति, त्रिष्टुप छन्दः धैवतः स्वरः अस्ति।

६४. यो राजभ्य ऋतनिभ्योददाश
यं वर्द्धयन्ति पुष्टयश्चनित्याः।
सरेवान्याति प्रथमो रथेन
वसुदावा विदथेषु प्रशस्तः।।[६४]

अस्मिन मन्त्रे ऋतनिभ्यः शब्दस्य प्रयोगः सत्यंन्यायं कुर्वन नृपेभ्यः उपदेशः इत्यर्थे कृतं अस्ति मन्त्रस्य गृतसमद ऋषिः आदित्य देवता विद्यते स्वराट् पङ्क्तिः छन्दः पंचमः स्वरः अस्ति"

६५. वि मच्छृथाय रशनामिवाग
ऋध्याम तेवरूण रवामृतस्य।
मा तन्तुश्छेदि वानतो धियं मे
मा मात्रा शार्यपसः पुर ऋतोः।।[६५]

अस्मिन मन्त्रे ऋतस्य शब्दस्य प्रयोगः जलऽर्थे तथा ऋतोः शब्दस्य प्रयोगः ऋतुसमयेन अर्थे अभवत मन्त्रस्य गृत्स्मद ऋषिः वरूणो देवता अस्ति त्रिष्टुप छन्दः धैवतः स्वरः अस्ति।।

६६. अपो सुम्यक्षवरूणभियसं
मत्स भ्राळतावोऽनु मा गृभाय
दामेव वत्साद्धि मुमुग्ध्यंहो
नही त्वदारे निमिषश्चनेशे।।[६६]

अस्मिन मन्त्रे ऋतावाः शब्दस्य प्रयोगः अति सत्यं ग्रहणं यः करोति अर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः वरूणो देवताः अस्ति निचृतत्रिष्टुप छन्दः धैवतः स्वरः अस्ति।

६७. प्र सीमादित्यो असृजद्विधर्ता ऋतं
सिन्धवो वरूणस्य यन्ति।
न श्राम्यन्ति न वि मुचन्त्येते वयो
न पप्तू रघुया परिज्मन्।।[६७]

अस्मिन मन्त्रे ऋतम् शब्दस्य प्रयोगः जलस्य अर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः वरूणो देवता विद्यते , निचृतत्रिष्टुप छन्दः धैवतः स्वरः अस्ति

६८. हये देवा यूयमिदापयः स्थ
ते मृळत नाधमानाय मह्यम।
मा वो रथे मध्यमवाळृते
भून्मा, युष्मावत्स्वापिषु श्रमिष्म।।[६८]

अस्मिन मन्त्रे ऋते शब्दस्य प्रयोगः जलरूप समुद्रादिभ्यः अर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः विश्वेदेवा देवता अस्ति निचृदत्रिष्टुपछन्दश्च धैवतः स्वरः अस्ति।

६९. ऋतं देवाय कृण्वते सवित्र
इन्द्रायाहिंघे न रमन्त आपः।
अहरहर्यात्यक्तुरपां कियात्या
प्रथमः सर्ग आसाम्।।
अस्मिन मन्त्रे ऋतम् शब्दस्य प्रयोगः जलं उत्पादयति इत्यर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः इन्द्र देवताः विद्यते भुरिक पङ्क्ति छन्दश्च पंचमः स्वर अस्ति।

७०. यो अप्स्वा शुचिना दैव्येन
ऋतावाजस्र उर्षिया विभाति ।
वया इदन्या भुवनान्यस्य
प्र जायन्तेवीरूधश्च प्रजाभिः।।[७०]
अस्मिन मन्त्रे ऋतावा शब्दस्य प्रयोगः सत्यस्य सम्यक प्रकारेण सेवनं कुर्वन् इत्यर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः अपान्नपाद देवता विद्यते भुरिक पङ्क्ति छन्दश्च धैवतः स्वरः अस्ति।

७१. अयं वां मित्रावरूणा सुतः सोम ऋतावृधा।
ममेदिह श्रुतं हवम्।।[७१]
अस्मिन मन्त्रे ऋतावृधा शब्दस्य प्रयोगः सत्येन वर्दनः अर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः मित्रावरूणौ देवते विद्यते गायत्री छन्दश्च षड्ज स्वरः अस्ति।

७२. इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति।
या ते मन्म गृत्स्मदा ऋतावरि प्रिया देवेषु जुह्वति।।
अस्मिन मन्त्रे ऋतावरि शब्दस्य प्रयोगः सत्याचरणेन् युक्तः अर्थे अभवत्
मन्त्रस्य गृत्स्मद ऋषिः सरस्वती देवता विद्यते बृहतीछन्दः मध्यमः स्वरः अस्ति।

७३. वैश्वानराय धिषणामृतावृधे घृतं न
पूतमग्नये जनामसि।
द्विता होतारं मनुष्श्च बाधतो धियारथं
न कुलिशः समृण्वति।।[७३]
अस्मिन मन्त्रे ऋतावृधे शब्दस्य प्रयोगः सत्यं यः वर्धयति इत्यर्थे अभवत्
मन्त्रस्य विश्वामित्र ऋषिः अग्निवैश्वानरौ देवताचास्तः जगती छन्दः निषाद् स्वरः अस्ति।

# सन्दर्भ सूची


१. ऋग्वेद - (१-१-१)
२. ऋग्वेद - (१-२-८)
३. ऋग्वेद - (१-१४-७)
४. ऋग्वेद - (१-२३-५)
५. ऋग्वेद - (१-३४-१०)
६. ऋग्वेद - (१-४१-४)
७. ऋग्वेद - (१-४३-६)
८. ऋग्वेद - (१-४४-११)
९. ऋग्वेद - (१-४४-१४)
१०. ऋग्वेद - (१-४५-७)
११. ऋग्वेद - (१-४६-११)
१२. ऋग्वेद - (१-४६-१४)
१३. ऋग्वेद - (१-४७-१)
१४. ऋग्वेद - (१-४७-३)
१५. ऋग्वेद - (१-४७-५)
१६. ऋग्वेद - (१-६४-१५)
१७. ऋग्वेद - (१-६५-२)
१८. ऋग्वेद - (१-६५-५)
१९. ऋग्वेद - (१-६८-२)
२०. ऋग्वेद - (१-६८-३)
२१. ऋग्वेद - (१-७२-८)
२२. ऋग्वेद - (१-७५-५)
२३. ऋग्वेद - (१-७७-१)
२४. ऋग्वेद - (१-७७-२)
२५. ऋग्वेद - (१-७७-५)
२६. ऋग्वेद - (१-७८-३)
२७. ऋग्वेद - (१-१०५-५)
२८. ऋग्वेद - (१-१०५-६)

२६. ऋग्वेद - (१-१०५-४)
३०. ऋग्वेद - (१-१०६-३)
३१. ऋग्वेद - (१-११२-२०)
३२. ऋग्वेद - (१-११३-१२)
३३. ऋग्वेद - (१-१२१-४)
३४. ऋग्वेद - (१-१२२-६)
३५. ऋग्वेद - (१-१२३-६)
३६. ऋग्वेद - (१-१२३-१३)
३७. ऋग्वेद - (१-१३२-३)
३८. ऋग्वेद - (१-१३३-१)
३६. ऋग्वेद - (१-१३७-२)
४०. ऋग्वेद - (१-१३६-२)
४१. ऋग्वेद - (१-१४२-७)
४२. ऋग्वेद - (१-१४३-१)
४३. ऋग्वेद - (१-१४३-७)
४४. ऋग्वेद - (१-१४५-५)
४५. ऋग्वेद - (१-१५१-३)
४६. ऋग्वेद - (१-१५१-४)
४७. ऋग्वेद - (१-१५१-६)
४८. ऋग्वेद - (१-१५१-८)
४६. ऋग्वेद - (१-१५२-१)
५०. ऋग्वेद - (१-१५२-३)
५१. ऋग्वेद - (१-१५३-३)
५२. ऋग्वेद - (१-५६-१)
५३. ऋग्वेद - (१-१६०-१)
५४. ऋग्वेद - (१-१६४-११)
५५. ऋग्वेद - (१-१६५-१३)
५६. ऋग्वेद - (१-६६-५)
५७. ऋग्वेद - (२-१-२)
५८. ऋग्वेद - (२-४-७)

५९. ऋग्वेद - (२-१६-२)
६०. ऋग्वेद - (२-२३-१५)
६१. ऋग्वेद - (२-२३-१७)
६२. ऋग्वेद - (२-२७-४)
६३. ऋग्वेद - (२-२७-८)
६४. ऋग्वेद - (२-२७-१२)
६५. ऋग्वेद - (२-२८-५)
६६. ऋग्वेद - (२-२८-६)
६७. ऋग्वेद - (२-२८-४)
६८. ऋग्वेद - (२-२६-४)
६९. ऋग्वेद - (२-३०-१)
७०. ऋग्वेद - (२-३५-८)
७१. ऋग्वेद - (२-४१-४)
७२. ऋग्वेद - (२-४१-८)
७३. ऋग्वेद - (३-२-१)

## चतुर्थ-अध्याय

# ऋत-तत्वस्य सम्बन्धा मूलक अध्ययनः

वेदेषु 'ऋत' शब्दस्य प्रयोगः विविधरूपेषु लभते। ऋतेन सम्बन्धिताः सर्वे शब्दाः एतेदृशाः सन्ति, येषां वेदेषु बारं-बारं प्रयोगः अभवत्। ऋतेन सम्बन्धित अध्ययन शाकल्यस्य चयनं कुर्वन समये शोधछात्राइदंप्राप्तं यत् 'ऋत' शब्दः वेदेषु विभिन्नेषु रूपेषु प्रयुक्तः अभवत् यथा- ऋतावरी, ऋतेन् ऋतावृधा, ऋताजात, ऋतस्य, ऋतस्पृशं. ऋतावा, ऋतम, ऋतावानम्. ऋतजाते, ऋतावृधौ, ऋतैः ऋतधामा, ऋतप्रजात, ऋतावानम्, ऋतसदनम्, ऋतवादिभ्य, ऋतसत, ऋताषाठ, ऋतसदनी, ऋतावाकेन्, ऋतायनी, ऋत्विजम् ऋत, ऋत्विम्, ऋतावसो, ऋतचित।

एतेषाम् शब्दानाम् वेदेषु पुनरावृत्तिः अपि लभते। यतोहि निम्नविवरणे दृष्टिपातम् करणेन जायते-

| | शब्द | संख्या |
|---|---|---|
| १. | ऋतम् | सप्तविंशति धा |
| २. | ऋतेन् | द्वादश धा |
| ३. | ऋतावृधः | द्वादश धा |
| ४. | ऋतावा | एकादश धा |
| ५. | ऋतावृधा | सप्त धा |
| ६. | ऋत्विजम् | षड् धा |
| ७. | ऋते | षड् धा |
| ८. | ऋतावरी | पञ्चध |
| ९. | ऋताय | चतुर्धा |
| १०. | ऋतावाना | चतुर्धा |
| ११. | ऋतजात | चतुर्धा |
| १२. | ऋतेजा | त्रिधा |
| १३. | ऋतपाः | त्रिधा |
| १४. | ऋत | त्रिधा |
| १५. | ऋतायते | त्रिधा |

| | | |
|---|---|---|
| १६. | ऋतायत | त्रिधा |
| १७. | ऋतजात | त्रिधा |
| १८. | ऋतायवः | त्रिधा |
| १६. | ऋतज्ञाः | द्विधा |
| २०. | ऋतयुग्भि | द्विधा |
| २१. | ऋतावान् | द्विधा |
| २२. | ऋतजा | द्विधा |
| २३. | ऋतस्पर्शः | द्विधा |
| २४. | ऋतावानम् | द्विधा |
| २५. | ऋतावरीम् | एक धा |
| २६. | ऋतधीतयः | एक धा |
| २७. | ऋतज्येन | एक धा |
| २८. | ऋतोः | एक धा |
| २६. | ऋतनिभ्यः | एक धा |
| ३०. | ऋतजातस्य | एक धा |
| ३१. | ऋतानाम | एक धा |
| ३२. | ऋतायो | एक धा |
| ३३. | ऋतप्सु | एक धा |
| ३४. | ऋत्विया | एक धा |
| ३५. | ऋतायत | एक धा |
| ३६. | ऋता | एक धा |
| ३७. | ऋतचित् | एक धा |
| ३८. | ऋतया | एक धा |
| ३६. | ऋत्वियः | एक धा |

यद्यपि 'ऋत' शब्देनृ तत्सम्बन्धि उपयुक्त तालिका अपूर्णाऽस्ति तथापि अनेन एततृ तथ्यम् सम्यक् प्रकारेण स्पष्टीयते यतृ ऋत शब्दस्य प्रयोगः अनेक बारम भिन्न-२ रूपेषु च जातः अस्ति। वेदेषु ऋतशब्दस्य सर्वाधिक प्रयोगः ऋग्वेदे लभते तदन्तरम् अथर्ववेदस्य स्थानमस्ति। अथर्ववेदस्य ३२ मंत्रेषु ऋत शब्द आगतः अस्ति। तदन्तरम् यजुर्वेदस्य स्थानमस्ति। सामवेदे सर्वेभ्यः अल्पम्

२२ बारम् ऋतशब्दस्य विभिन्नरूपेषु प्रयोग अभवत्।

परञ्च 'ऋत' शब्दस्य अर्थस्य प्रश्न अस्ति तस्य-विषये वैदिक साहित्ये विविध अर्थवाचकता दृष्टिगोचरः भवति। यतोहि निम्नप्रमाणानामुपरि दृष्टिपातेन् ज्ञायते।

अमरकोषस्य (१,६,१२) अनुसारम् " सत्यं तथ्यं ऋतम् सम्यकम्" उक्तमस्ति।

निरूक्तकारेण (४,१,४५) 'ऋतस्य' निर्वचनम् कुर्वन लिखितमस्ति यत् " ऋतं सत्यं यज्ञं वा" उक्तमस्ति।

एवमेव वेदभाष्यकार सायणेन् ऋग्वेद्भाष्य (४,२३,८) "ऋत्" शब्दस्य अर्थ कुर्वन् लिखितमस्तियत " ऋतशब्देनेन्द्रोवादित्योवासत्यं वा यज्ञो वोच्यते" निरूक्ते (२,७) "ऋतस्य" प्रयोगः "जलस्य" कृते अपि आगतः अस्ति- " ऋतमृत्युद्कनाम्" - सम्भवतः अस्मात् कारणात- वैदिक ऋचाषु " नदीम्" "ऋतस्य" वाहकः विज्ञापितम् अस्ति यथा ऋतर्पन्ति "नदीम्" वेदेषु " ऋतावरी" उक्तं अस्ति। जलस्य श्रोत्राणाम् कृते " ऋताधीनवत्" शब्दमपि वेदमन्त्रेषु लभन्ते।

ऋषि दयानंद सरस्वती- यत् प्रस्तुत शोध अध्ययनस्य अन्तर्गते विशेषरूपेण विचारयोग्यमस्ति। तेन् स्व ऋग्वेदादिभाष्यभूमिकायाम् (१-६-१६६) यजुर्वेदसम्पूर्ण भाष्यम् कुर्वन् "ऋत" शब्दस्य अनेक अर्थ कृताः, येषु सत्यवाचकार्थे निम्नसर्न्भानि दयानंदभाष्ये लभन्ते।

तथा- "सत्यस्य" विविध रूपाणाम् - वर्णनमपि दयानन्द भाष्ये निम्नस्थलेषु लभते-

सत्य ब्रह्मा- यजु० (१६-७२)

सत्य ब्रह्मा ऋग्वेद् (५-४-१२)

यथार्थ योगाभ्यास यजु० (१६-७३)

विद्याविनयेन युक्तः न्यायः यजु० (१६-७५)

बहिरस्थ वायुः यजु० (१६-७६)

यथार्थ सत्य विज्ञानः यजु० (१६-७७)

यथार्थ व्यवहारः यजु (१६-७६) ऋतस्य एतदर्थम् स्वामि दयानंद सरस्वतीना सत्यार्थप्रकाशे तृतीय सम्मुलासे तथा ऋग्वेदेऽपि कृतमस्ति - (४,३,३)

सत्यव्यवहारं। ऋग्वेद- (४,३,८) ऋक् (४-३-४०)।

जल।- यजु.(२६-६), ऋग्वेद- (३-३,३३), ऋक्- (४-३-२)

ऋक-(४-३,३) ऋक् (५,४-१२)

सत्य जलम् वा। - यजु० (२६-२६)

प्राप्तुम योग्य कारणः। ऋग्वेद- (३-३-५४)

सत्य कारणम्। ऋग्वेद (३-३-५४), ऋक्(५-४-१२) ऋक् - (५-४-१५) ऋक् (५-४-६२)

सत्यस्य प्रकाशकः । ऋग्वेद-(३-३-५४)

सत्येन् प्रसिद्ध - ऋग्वेद- (३-३-५४)

सत्यात् उत्पन्नः। ऋग्वेद (३-३-५८)

सत्यस्य विभागकर्ता प्रकाशमानः। ऋग्वेद - (४-३-१)

सत्यसदृशा आचरणः ऋग्वेद-(४-३-७)

परमेश्वर प्रकृतिश्च ऋग्वेद (५-४-५८)

सत्य स्वरूपः । -ऋग्वेद - (५-४-६२)

जलस्य सदृश्य सत्य। - ऋग्वेद- (५ - ४-८०), ऋक- (६-४-३६)

सत्यविद्याः ।. ऋग्वेद-(६-४-५२)

सत्यधर्मः । ऋग्वेद- (६-४-६७)

"ऋत" सम्बन्धि उपर्युक्त सन्दर्भेषु चिन्तनेन निम्न निष्कर्ष- ध्वनिताः भवन्ति-

१. ऋत शब्दस्य सत्यार्थे सर्वाधिक प्रयोगः लभते।

२. सत्यस्यअपि अनेक प्रकारस्य ऋषयः दयानंदम् ग्राह्यः सन्ति।

यथा- परमेश्वर प्रकृति सत्यस्वरूप सत्यस्य प्रकाशः सत्यात् उत्पन्नः सत्यस्य विभाग कर्ता सत्यकारणः यथार्थ सत्यविज्ञान सत्यविद्या, सत्यधर्म सत्येन् सदृशा आचरणः सत्य वेद विज्ञानः।

३. सत्यस्य अतिरिक्तम् ऋत् शब्दस्य प्रयोगः ऋत् शब्दस्य प्रयोगः जलस्य कृते अपि ऋषि दयानन्दं ग्राहयः अस्ति। अल्पात् अल्पं पञ्च सन्दर्भम् एतादृशं लभते, येषु ऋषि दयानन्देन ऋतम ऋतम् जलस्य अर्थे प्रयुक्तः कृतमस्ति।

४. एतेषां अतिरिक्तंमपि ऋषि दयानन्देन "ऋत शब्दस्य" "बर्हिस्थः वायुः" कृते प्रयोगः कृतः अस्ति।

एतेषाम् बिन्दुनामुपरी विचारणेन जायते यत ऋषि दयानंदः ऋत शब्दस्य अर्थनित्वा

निरूक्तकार यास्काचार्यस्य 'सत्य' एवं 'जल' विषयक अर्थेन न केवलम् सम्मति अस्ति । परञ्च तस्मात् अधिकं वर्गीकृत अर्थेषु सत्यं स्वी कुर्वन्ति। निरूक्तकारेण बहिरस्थ वायुः इत्यस्य अर्थे रूप शब्दे 'ऋत' शब्दस्य प्रयोगः न कृतम् । एतद् ऋषि दयानंदस्य स्व मौलिक अर्थः विद्यते। अनेन एतत् जायते यत् ऋषि दयानंदं वैदिक शब्दानां अर्थम् कुर्वन समये पूर्वोक्त यास्काचार्यादिनाम् अर्थानि न केवलम् स्वीकार्याणि सन्ति, अपितृ तेन सह नम विस्तृत आधारमपि प्रधानम् कृर्वन्ति।

प्रस्तुत सन्दर्भे महत्वपूर्ण मेकम् विचारणीयः प्रश्नजायते यत् "ऋत" शब्दः अनेकार्थ वाचकः अस्ति तर्हि तस्य कम् अर्थम् कुत्र गह्ययात्। एषा समस्या विचार योग्या भवति। परञ्च अस्याः समस्यायाः समाधानम् 'ऋत' शब्दात् व्युत्पत्तिमूलक अर्थे विचार कुर्वन समये अन्वेषणम् भवितुम् शक्नोति। यद् ऋषि दयानंदस्य भाष्य प्रणालिकायाः मूलाधारः अस्ति। यतोहि अस्मात् पूर्वमपि एतत् उल्लेखम् कृतवान् यत् ऋषि दयानंदः वैदिक शब्दानां अर्थः योगिता वादस्य आधारे कुर्वन्ति। यस्योपरि प्रस्तुत शोध अध्ययनस्य द्वितीय अध्याये विचारः अभूत। यस्यानुसारं प्रत्येक शब्दस्य धात्वपरक अर्थम् भवति। यस्माद् तस्य शब्दविशेषस्य व्युत्पत्तिः भवति। 'ऋत' शब्दस्य उत्पत्तिः भवति।

१. ऋ- गतिप्रायणयोः (स्वादिगण, परस्मैषद)
२. ऋ,सृ-गतौ (जुहोत्यादिगण, परस्मैपद)[१]

उपरीस्तम् उभयोः व्युपत्यौ गत्यार्थकौ स्तः। "ये ये गत्यार्थः ते ते ज्ञानगमनप्राप्त्यर्थाः" अतः ऋत शब्दः तेषाम् सर्वाषाम् अर्थान् वाचकः बोधकः एवं ग्राहकं स्वीकुर्वन व्याकरण सम्मतामस्ति। येषु ज्ञानगमन प्राप्ति संभव अस्ति अतएव "ऋत" शब्दस्य कस्मिन् मंत्रे कथमः प्रधान अर्थः ग्रहणीयात्। अस्य निर्णयः संदर्भ अन्तर्गते विशिष्ट देवता क्रिया इत्यादि दृष्टिगतं रक्षित्वा कर्तुम शक्नोति। एषा प्राचीन वैदिकअर्थप्रणाली ऋषिणाऽपि स्वीकृतमस्ति। यतोहि निम्न सन्दर्भानामुपरी दृष्टिपातम् कुर्वनजायते।

ऋतेन् - ज्ञानार्थकः
ऋतावृधौ - ज्ञानगमनप्राप्त्यर्थे
ऋतस्पर्श - ज्ञान, गमनः, प्राप्तेः अर्थे।[२]
एते त्रयोऽपि शब्दः ऋग्वेदस्य एकस्मिन मंत्रे आगतः सन्ति
ऋताय - ज्ञानार्थकार्थे।[३]

ऋतेन - ज्ञानस्यार्थे।

ऋतावृधौ - गमनस्यार्थे।

एतेषां त्रयाणाम् शब्दानाम् प्रयोगः ऋग्वेद (१-२-२३-५) जातः अस्ति।

"ऋतम्" ज्ञानस्यार्थे- "ऋतस्य" प्राप्त्यर्थे एतयोः शब्दयोः प्रयोगः अपि ऋग्वेदस्य एकस्मिन् मंत्रे अभवत्।[४]

ऋत्विजम् - प्राप्त्यर्थे।[५]

ऋतावृधा - ज्ञानार्थ।[६]

सः 'ऋत' शब्दः सत्येन उत्पन्नः।[७]

प्रस्तुत सन्दर्भे विचार कुर्वन समये मुख्यमेकम् तथा केन्द्रीय महत्वस्य एतत् प्रश्नमपि चिन्तायोग्यमस्ति यत् "ऋत्" नामकशब्दं दार्शनिक तत्वस्यरूपे कथं विवेचित एवं व्याख्यायितम् भवेत्। अत्र एतत् प्रश्नः अतएव अपि विशेषरूपेण विचारणीयमस्ति यत् ऋतम् वैदिक दर्शनस्य एकम् विशिष्टं दार्शनिक तत्वमपि जानन्ति- विशेषेण ऋग्वेदस्य वेदानाम् व्याख्याकारैः मनिषीभिः चिन्तकेभ्यश्च ऋतम् अस्मिन्नेव रूपे व्याख्यायितं अस्ति। ऋषिणासन्दर्भे ऋत सम्बन्धिनः एनेकार्थक नित्वा एका भ्रान्ति उत्पन्नमपि स्वाभाविकमस्ति, यतोहि तेन ऋतम् दार्शनिक तत्वस्य रूपे न विवेचितम् ऐषा भ्रान्ति सर्वथा निराधारः प्रतीयते, यतोहि तेन वैदिक शब्दान् यौगिक शब्देव गृहीतमस्ति। लौकिक रूढ़िगतम् अर्थञ्च तेन न ग्राह्यते, अतएव ऋषिणा ऋतस्य अनेकार्थ ग्रहणम् कुर्वन तस्य व्यापक ग्राह्यतम् स्वीकृतमस्ति। ऋषेः दृष्टयामूऋतमूलतः जगतस्य सर्वोच्चविधायकसत्ता ब्रहम या परमेश्वर विद्यते। महर्षि दयानंदेन ऋतस्य एक अन्यार्थ "सत्यस्य प्रकाशकापि"[८] कृतमस्ति।

तस्मात् निश्रितः जगतश्च मौलिकविधान वा नियममपि ऋतः अस्ति यतोहि पूर्णपरमेश्वरसत्तायाः पूर्ण जगतस्येव अभिव्यक्ति भवति अपूर्णम् न यथा कि प्रस्तुत वेद मंत्रे दृष्टिपातेन जायते।

"ओ३म् पूर्णमदं पूर्णमिदं पूर्णात्मुच्यते।
पूर्णस्य पूर्णमादाय् पूर्णमेवाविशिष्यते।"[९]

अतएव "ऋत" या "परमेश्वर" यम श्री अरविन्देन "परमऋतचितमपि" कथितम अस्ति। तस्मात् उत्पादितः "ऋत्" या " जगतस्य" देवी विधाने अस्मिन् सम्पूर्ण ब्रहमाण्डे अस्तित्वमानः सर्वे

ग्रहोपग्रहादि संचालित एवम् व्यवस्थिता भवन्ति अतएव सार्वभौग नियमस्यरूपे ऋतेकम् एतादृशं अटलनियम या देव्य-विधान विद्यते यस्योपरी कस्य बाह्य परिवर्तनस्य कोऽपि प्रभावो न भवति, सः सदैव अपरिवर्तित तिष्ठति। महर्षि दयानंदस्यानुसारं सृष्टेः तस्य मूलस्य नियम या "ऋततत्वस्य" व्याख्यानः परमेश्वरेण सृष्ट्यादे वेदानाम् रूपे कृतमस्ति। अतएव " सत्यस्य विभागकर्ता" [१०] परमेश्वरेण ईश्वरस्य विधानस्य प्रकाशनम् ऋग्वेदे "ऋचानाम्" रूपे यजुर्वेदे "मंत्राणाम्" रूपे तथा सामवेदे "सामरूपे" च कृतमस्ति। सृष्टि निर्माणस्य प्रकीयाम् ऋतेवम् सत्य द्वयोः तत्वयोः वर्णनमपि ऋग्वेदे आगतमपि किन्तु सत्यात् पूर्व ऋत शब्दस्य प्रयोगः एतद् दर्शयति यत् ऋतस्य अविर्भावं सत्यात् पूर्वम् अभवत्। यतोहि निम्न मंत्रस्योपरी दृष्टिपात करणेन जायते-

ओ३म् ऋतञ्च सत्यञ्चाभीद्धात तपसोऽध्यजायत।
ततो रात्र्यजायत ततः समुद्रो अर्णवः।।[११]

अर्थात तस्येव अनन्त ज्ञानमये सामर्ध्येन सर्वेषाम् विद्यानाम् कोषः वेदशास्त्र प्रकाशितमस्ति, यथाकि पूर्व सृष्ट्याम् प्रकाशितमासित। अग्रेस्थ कल्पेषु अपि एवमेव वेदानाम् प्रकाशः करिष्यति (सत्यम्) एषः त्रिगुणात्मकः अर्थात् सत्वरजतमगुणेन च युक्तः अस्ति यस्य नामानि अव्यक्त अव्याकृत प्रधान प्रकृति अस्ति यः स्थुल सूक्ष्म जगतस्य कारणः अस्ति सोऽपि (अध्यजायत) अर्थात् कार्यरूप भूत्वा पूर्वकतपवत् उत्पन्न अभवत्। तस्येव ईश्वरस्य सामर्थेन यः प्रलयस्य पृष्ठेः सह स्त्र चतुर्थुगस्य प्रमाणेन रात्रि वदन्ति। सोऽपि पूर्वप्रलयस्य तुल्यमेव भवति। अस्मिन ऋग्वेदस्य प्रमाणमस्ति यत् - यदा-यदा सृष्टि भवति तस्मात् पूर्व आकाशः अन्धकाररूपे तिष्ठति तस्मिन्नेव अन्धकारे सर्वजगत सर्वजगतस्य पदार्थानि सर्वे जीवाः आच्छादिता तिष्ठति तस्येव नाम महारात्रि अस्ति तदन्तरं तस्मादेव सामर्थ्यात् पृथ्वी मेघमण्डलेच यः महासमुद्रः अस्ति। सोऽपि पूर्व सृष्टया सदृशेव उत्पन्नः अस्ति।

अस्मिन् मंत्रे 'ऋत' एवम् 'सत्य' उभयोः शब्दयोः प्रयोग अभवत। येन एतत् जायते यत् वेदे 'ऋत' शब्द सत्यस्य पर्यायमात्र न भूत्वा तस्माद् भिन्न विशिष्टं चास्ति। विशिष्टम् अस्मिन्नार्थे अस्ति यत् ऋतस्य स्थानाः सत्यात् प्रथमः अस्ति सः सृष्ट्या मूलतत्वः अस्ति यतोहि सत्य संसारगत अवधारणा अधिकम् प्रतीयते किन्तु कुत्र-कुत्र "ब्रह्म शब्दमपि सत्यम्"[१२] कथित मस्ति अस्मिन्नेव सन्दर्भे अत्र एतद+ङपि उल्लेखनीयमस्ति यत्- ऋषिवर दयानंद सरस्वतीना ऋग्वेदस्य ऋचायाम् (६,४,५२) प्रयुक्त "ऋत" शब्दस्य अर्थ सत्यविद्याकृतमस्ति। ऋषि दयानंदेन "ऋत" शब्दस्य एकमन्यत्र महत्वपूर्ण अर्थ "यथार्थ व्यवहार" [१३] या "सत्यव्यवहार"[१४] अपि कृतमस्ति परन्तु

यथार्थ या" "सत्यव्यवहारस्य कसौटी किं भवितुम शक्नोति अस्य समाधानमपि महर्षिना ऋतस्य आचरणपरक अवधारणां स्वीकृत्य कृतमस्ति। तस्य दृष्टयां ईश्वरः व्यवहार या आचरणस्य प्रकाशकः तथा नियामकः अस्ति। अस्य समुचित बोधः ईश्वरस्य गुणकर्मस्वभावस्योपरी विचार करणेन भवितुम शक्नोति यः वेदेषु वर्णितः अस्ति। महर्षिणा ईश्वरं सत्य स्वरूप न्यायकारी दयालु सर्वज्ञ सर्वशक्तिमान, आनन्दस्वरूप अभय, नित्य, पवित्रया"[१५] शुद्ध बुद्ध मुखस्वभाव सदृशः मानितम् अस्ति अतः मनुषस्य प्रतीकः सः कर्मयः वसवहार ईश्वरस्य उपर्युक्तं गुण, कर्म, स्वभावेन संगतः अस्ति। तम् सत्य या यथार्थ- व्यवहार कथितुम शक्नुवन्ति । तमेव ऋग्वेदस्य मंत्रे वर्णित "ऋत"[१६] शब्दस्य अर्थः कुर्वनसहय धर्मस्य संज्ञा प्रदत्ता अस्ति। अस्येव सत्य धर्मस्य महर्षि मनुना दशानि लक्षणानि मानितानि-

धृतिक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।[१७]

महर्षि दयानंदेन एतेषु दशलक्षणेषु अहिंसाम् स्वीकुर्वन धृत्येः एकादश लक्षणानि स्वीकृतानि। सः महर्षि मनु उधृतकुर्वन उक्तमस्ति यत् सम्पूर्ण वेद मनुस्मृतिः ऋषिप्रणीत शास्त्रसत्यपुरूषाणामाचारः यास्मिनकर्मणि स्व आत्मा प्रसन्ना तिष्ठेत् अर्थात् भय शंका लज्जा यस्याम् न भवेत् तेषाम् कर्माणाम् सेवनमुचितमस्ति। पश्यतु यदा कश्चिद मिथ्याभाषणः चौर्यादिकस्य ईच्छायम करोति तदेव तस्य आत्मनि भय शंका लज्जा अवश्यमेव जायते अतएव सः कर्म न करणीयम् योग्यमस्ति।[१८]

महाभारतकारेण धर्मस्य इमम् महत्ताम् प्रतिपादित कुर्वन कथितमस्तियत्-

ऊर्ध्वबाहु र्विशैम्येण न च कश्चिच्छ्णोति मे।
धर्मादर्थश्च कामश्च स धर्मः किन्न सेव्यते।।[१९]

अर्थात अहं हस्तमुत्थाय कथयामि परम च मम कश्चित न श्रृणोति धर्मेणैव अर्थ कामस्य च प्राप्ति भवति। तस्य धर्मस्य सेवनम् सर्वे जनाः किमर्थम् न कुर्वन्ति। वस्तुतः धर्ममानवसमाजस्य धारक तत्वोऽस्ति अनेनैव मनुषस्य कर्तव्य, अकर्तव्य निर्धारिता भवन्ति। धर्मस्य मनुषस्य कर्तव्रू, अकर्तव्य निर्धारिता भवन्ति। धर्मस्य अनेके भाग उपभाग महर्षि मनुना मनुस्मृति या मानवध र्मशास्त्रे कृतानि सन्ति-

यथा वर्णधर्म, आश्रमधर्म, राजधर्म, प्रजाधर्म, दण्डविधान कर्मफल व्यवस्थादि एतेषाम् सर्वेषाम् मूले `ईश्वसरस्य सर्वाधारक ऋत या धर्मस्य उल्लघनम् करोति तस्य पतनः भवति। एतादृशम् पतन कार्यान् अवरोद्धम् ईश्वर दण्डविधानः प्रयुज्यते। ऋषि दयानंदेन यजुर्वेद "विद्या तथा विनयेन युक्तः""न्यायः" कथयित्वा "ऋतम्" परिभाषितम् कृतम् अस्ति।[२०]

वैदिक दर्शनान्तर्गते प्रतिपादितः पुरूषार्थ चतुष्टयधर्म, अर्थ, काम, मोक्षश्स्य अवधारणमपि महर्षिणा स्वीकृमस्ति, येषु अर्थ एवम् कामलौकिक पुरूषार्थः अस्ति। मोक्ष पारलौकिक वेदानामाभ्यान्तरे मोक्ष। निःश्रेयसः मानव जीवनस्य चर्मलक्ष्यम् परमपुरूषार्थम् च मानितमस्ति। धर्म लौकिक एवं पारलौकिक पुरूषार्थस्य सिद्धया मुख्याधारः स्वीकृतमस्ति। महर्षे एतत् कथनं विचारणीयमस्ति यत् -

हे ईश्वर दयानिधे! भवत्कृपाऽनेन जपोपासनादिकर्मणा
धर्मार्थकाममोक्षाणां सद्य सिद्धिर्भवेन्नः।। [२१]

जीवनस्य चरम लक्ष्यस्य/मोक्षस्य प्राप्तेः उपायः विद्यते। यथार्थयोगाभ्यासः, महर्षिणा यजुर्वेदस्य १६,७३ अध्यायस्य मन्त्रे वर्णितः "ऋत" नामक शब्दस्य अर्थः "यथार्थ योगाभ्यासः" कृतःअस्ति। यदि अनेन दृष्टया पश्यामः तस्य परं सत्तयाः साक्षात्कारस्य साधनं अपि महर्षिना "ऋत" या "योगाभ्यासः" विज्ञापितं अस्ति। योगाभ्यासेन प्रकाशवतीः बुद्धयाः प्राप्तिः भवति। यं योगदर्शनकार महर्षि पतञजलिना, "ऋतम्भरा तत्र प्रजा" कथयित्वा परिभाषितं कृतं अस्ति। तस्य प्राप्तेः विविध ा उपायानाम् योगदर्शनकारेण योगसूत्रे वर्णितंअस्ति। योगभ्यासेन् सह यथार्थ शब्दः कति सम्पक अर्थः एवं भाव व्यजञ्नस्य बोधकः अस्ति अस्यानुमानम् योग नाम्नी प्रचलित वर्तमाने योग उपरिदृष्टिपातं करणेन चलति। यस्य आधारः मुख्य रूपेण आसन् प्राणायामं च अस्ति, यस्य योगस्य एक मात्र उददेश्यं शारिरिक दृष्टया मानवं स्वस्थ- समिचिनम् निमार्ण करोति तर्हिभोग भौतिकताव्याः युगे पतिस्वर्धायाः प्रागणें कस्मात् अपि पृथक न भवेत। यतोहि योगस्य वास्तविक उद्देश्यं मनुष्यं निःश्रेयस्व मुक्ति (मोक्षस्य) प्राप्तिः तर्हिदुःखस्य मूल भवबन्धनम् क्षित्वा परमानन्दस्य सः प्राप्ती कुर्यात् महर्षि पतञजलिना अस्य साधनम् चितवृत्तिनाम निरोधः विज्ञापितं अस्ति। वृत्तिनाम् निरोधेन "तदाद्रष्टुः स्वरूपेऽवस्थानम्" अर्थात् द्रष्ट्रा स्व तथा ब्रह्मस्य स्वरूप साक्षात्कारम् करोति अस्य साधनमस्ति- समाधेः सिद्धी । महर्षि पतञ्जलिना समाधेः सिद्धयर्थम् अष्टांग योगः क्रियायोगः अभ्यासः वैराग्यः ईश्वर प्राणिधानश्च इत्यादि साधनानि ज्ञापितवन्तः' यद् साधकस्य योग्यता प्रवृत्ति अवस्थादिम् दृष्टिगतम् रक्षन ब्रह्म वेत्ता गुरूणा निर्धारितम् क्रियते यत् कस्य साध ाकस्य कृते कथमः साधनः अभिष्टः रूचिकरम् भावप्रदम च भविता अस्ति।

अष्टांग योगश्च अन्तर्गते सामान्यतः योगस्य सर्वाणि अंगानि आगच्छन्ति, यदअत्र एवम् सन्ति-

१. यम

२. नियम

३. प्रणिधान

४. आसन

५. प्राणायाम

६. प्रत्याहार

७. धारण

८. ध्यान,समाधि

१. यमः- एतेषाम् संख्या पंच अस्ति- अहिंसा, सत्य असत्य, ब्रह्मयर्च, अपरिग्रहम् च। एते पञ्महाव्रताऽपि कथ्यते।

एतेषाम् महत्वम् सार्वभौम सार्वकालिकमस्ति। अहिंसायाः फलम् महर्षि पतञ्जलिनः बैरबुद्धया परित्यागः विज्ञापितमस्ति। वेदेषु मैत्री, संख्यस्वभाव, भ्रातृभाव एवम् स्वस्ति मूलकानि मंत्राणि लभन्ते। यथा-

१. ओ३म् स्वस्ति पन्धा मनुचरेम सूर्यचन्द्रमसाविव।।[२२]

२. सूत्रामाणम् पृथिवी द्यामनेहहसं सुशर्माणि मदितिं सुप्रणीतिम्।।[२३]

"अहिंसया" सह सत्यनायकः द्वितीय महाव्रतः अस्ति। ऋषिणा स्ववेद भाष्ये ऋत शब्दस्य अर्थ सत्य अनेक स्थलेषु कृतमस्ति। सत्यस्य अनेक रूपाणाम् तेन यथा प्रसङ्गम् उल्लेखितमस्ति-

येषु आचरणमूलक सत्यस्यापि विशेषरूपेण उल्लेखतमस्ति। तेषाम् दृष्टौ यः पदार्थः या दृशि भवेत् तम् तथैव कथनीयम्। माननम् च सत्य कथयति।[२४]

"अस्तेय" तृतीय महाव्रतम् अस्ति। यस्यार्थः अस्ति चोर्यं त्यागः वस्तुतः अनाधिकार पूर्वकं परपदार्थस्य इच्छा ग्रहणस्य चेष्ठामपि परिग्रह अस्ति। वेदे " तेन त्यक्तेन भुञ्जीथा मा मृधः कस्यास्वद्धमम्[२५]" उपदेशः कृतमस्ति। ब्रह्मचर्यस्य उपदेशमपि स्त्री-पुरूषोभयोः कृते वेदेषु लभते।

"यथा ब्रह्मचर्येण कन्या युवानम् विन्दते पतीम्।"[२६]

"अपिरिग्रह" पंचम महाव्रत अस्ति। यस्यार्थः आवश्यतायाः अधिकं संग्रह न करणीयम्- परन्तु अद्य योग्यस्य नाम्नः विश्वस्तरे एकः आपणः विकसितवान, यमतजुतनृर्गते गुरूशिष्यवत् पवित्रसम्बन्ध न भूत्वा विक्रेता उपभोकतायाः सम्बन्धः निर्मितः अस्ति। केचन हठयोगस्य क्रियाणां माध्यमेन स्वास्थ्य रक्षणस्य रहस्यं सिक्षित्वा (ज्ञात्वा) दीर्घाराशि लुन्ठनमेव अद्यते प्रचलित योगाचार्याणाम् एकमात्र लक्ष्यं निर्मित्वा स्थित्वा अतएव ऋषि दयानंदेन - "ऋतम् च स्वाध्याय प्रवचने च" अस्योपनिषद वाक्यस्यार्थ एतत् कृतमस्ति यत् "यथाचरणेन पठेयुः पाठेयुः च"।[२७]

नियम :-

महर्षि पतञजलिना एतेषाम् संख्यापंचमानितानि-
"शौच सन्तोष, तपः, स्वाध्यायेश्वर प्रणिधानानि नियमः।[२८]

एतेषाम् आचरणम् महर्षि मनुना यमस्य साक्षेपविज्ञापितवान। शौचस्याथः अस्ति- आभ्यान्तरिक बहिरस्थ पवित्रता च सन्तोषस्य अर्थः अस्ति- धर्मेण पुरूषार्थेन च फलं प्राप्ते न अधिकम् प्रसन्नम न क्षय समये न दुःख अनुभवनीयम्। तप, सुख, दुःख, मान, अपमान, इत्यादि द्वन्द्वान् संहनीयम्। आत्मा परमात्मा विषयक तत्वचिन्तन मनन एवं अध्ययनं करणीयम। नित्यप्रति ईश्वरस्यप्रति समर्पित समाहित चित्त भूत्वा तस्य भक्ति सन्ध्या, वन्दना इत्यादि सदैव करणीयम्।

३. आसन :- आसनम् तृतीयम् महत्वपूर्णम् अंगः अस्ति। एतेषाम् संख्या तर्हि योगसम्बन्धिग्रन्थेषु सहस्त्रा मानिता सन्ति परन्तु सा धनाया अनुकूलं तर्हिसिद्धासन, सुखासन, पद्मासन, तथा वज्रासन इत्यादयः उपयोगिनः सन्ति।

४. प्राणायाम :- महषि दयानंदेन चतुर्प्रकारस्य प्राणायामः मानितम्- रेचक, पूरक, कुम्भक, स्तम्भवृति च। एतेषां अभ्यासेन देह एवं चित्तस्य मलानाम् नाशोभवति। सत्वप्रकाशस्य च उपलब्धि भवति यद् साधनायाः कृते आवश्यकमस्ति।

५. प्रत्याहार :- प्रत्याहारस्य अर्थः अस्ति- इन्द्रियाणां बहिरमुखि वयापारम् निरोधयित्वा अन्तर्मुखी व्यापारस्य प्रारंभ भवेत्।

६. धारणाः- धारणायाः अर्थः अस्ति- देशबन्धः चित्तस्य धारणा अर्थात् चित्तस्य कस्मिन्नपि देशे (मूर्धा, मूलाधार, नाभिप्रदेशे) स्थिर कृतं धारणा कथ्यते।

७. ध्यान एवं समाधि :- एषा धारणायाः परिपक्व अवस्था भवति दीर्घकालपयन्तं चित्तस्य एकाग्रता भवितुम ध्यान कथ्यते। अस्य फलं समाधि अस्ति। अस्मिन अवस्थायां चित्तवृतयः निरूद्धा भवन्ति। समाधि योग्य अष्टम अंग अस्ति। वस्तुतःकेवलं योगांङ्गम न भूत्वा योगस्य फलमपि अस्ति। योग सूत्रकारेण समाधेः द्वौ प्रमुख भेदौ मानितवान सविशेष, निर्विशेष च।

ऋषि दयानंदेन स्व यजुर्वेद भाष्य ऋत शब्दस्य अर्थः सत्य जलं च कृतम् तथैव ऋग्वेदे ऋत शब्दं जलसदृश्यम् विज्ञापितवान्।

अत्र एतत् विचारयोग्य प्रश्न अस्ति यत् "ऋत" "जलवत्" कथम् अस्ति अस्य प्रश्नस्य उचरम् जलस्य स्वरूपे दृष्टिपात करणात् अन्येषणम् भवितुम् शक्नोति। जलशोस्य अस्ति सः पृथिवी वायुना अवशोषिताः कृतये। ऋतः अपि विश्वधारक विधानेकारणेन सर्वेषु भूतेषु मानवेषु परिव्याप्तं तिष्ठति। जलेव जीवनमस्ति। जन्तु एवं वनस्पति जगतस्य महत्वपूर्ण आधारः जलमस्ति। एषाएव स्थिति ऋतस्य अपि अस्ति सः जलवत् सम्पूर्णमः विश्वम् आबद्धम करोति। तदेव नियमबद्ध दिवरात्रिश्च ऋतुपरिवर्तनञ्च वैविश्विक चक्र अनव्रत (सदैव) चलन् तिष्ठति। यदि विश्वात् क्षणेनसह अपि ऋत विधानः शिथिल भवेत् चेत अविलम्ब विध्वंसकारी सर्वनाशस्य दृश्यं जगते उपस्थितौ भविष्यति। पृथ्व्याः गति तस्य स्वधूरी उपरी सूर्यस्यपक्षेभारः सूर्य इर्दगिर्द च परिभ्रमणस्य व्यवस्थित क्रमः ऐते सर्वे विश्वनियन्तायाः सुस्थिर एवं नियामक विधानस्य कारणेन सम्भव अस्ति। जलस्य एका महत्वपूर्ण विशेषता अस्ति। सः निचैः प्रभवति। ऋत अपि जगतसृष्ट्रा ब्रह्मात निःश्रिता भूत्वा प्राकृतिनियमानाम् रूपे भौतिक जगतं संचालितम् च करोति। पुनः तस्मादपि अग्रे प्राणी जगतस्य जैवनियमानाम् कर्मविधानस्य रूपे सक्रिय तिष्ठति अन्ते भूक्तेः साधनस्यरूपे यथा योग विद्या अभ्यासेन मार्गम् प्रशस्ति करोमि।

## संदर्भ सूची


१. वामन शिवराम आप्टेः संस्कृत -हिन्दी कोश

२. ऋग्वेद - (१-१-२-८)

३. ऋग्वेद - (१-७-३४-१०)

४. ऋग्वेद - (१-७-३४-१०)

५. ऋग्वेद - (१-६-४४-११)

६. ऋग्वेद - (१-६-४४-१४)

७. ऋग्वेद - (२-३-५८)

८. ऋग्वेद - (३-३-५४)

९. ऋग्वेद - (१-२-३)

१०. ऋग्वेद - (४-३-१)

११. ऋग्वेद - (१०-१९०-१)

१२. यजुर्वेद - (१९-७२)

१३. यजुर्वेद - (१९-७६)

१४. ऋग्वेद - (३-३-८)

१५. आर्य समाज के नियम-२ःमहर्षि दयानन्द सरस्वती।

१६. ऋग्वेद - (६-५-६७)

१७. मनुस्मृतिः (६-९२) (आर्ष साहित्य प्रचार ट्रस्ट)।

१८. सत्यार्थ प्रकाशः समुल्लास-दश-पृ० १७६ (आर्ष साहित्य प्रचार ट्रस्ट)।

१९. वेद विज्ञान विथिका - पृ० २६

२०. यजुर्वेद - (१४-७५)- दयानन्द भाष्य

२१. वैदिक यज्ञ पद्धति - (संस्करण ४ मार्च २००१) पुस्तक भण्डार-गुरूकुल कांगडी हरिद्वार

२२. ऋग्वेद - (५-५१-१५)

२३. यजुर्वेद - (२१-६)

२४. सत्यार्थ प्रकाशः (पृ० १०) - (आर्य साहित्य प्रचार ट्रस्ट)।

२५. यजुर्वेद - (४०-१)।

२६. अथर्ववेद - (११-५-१८)

२७. सत्यार्थ प्रकाशः तृतीय समुल्लास- पृ० ५१ (आर्य साहित्य प्रचार ट्रस्ट)।

२८. योगसूत्र- (२-३२)

# अध्याय-पँचम्

# निष्कर्ष

वेदेषु वर्णितः ऋत तत्वस्य प्रस्तुतशोधस्यडन्त गहन अध्ययन मनन कुर्वन्। शोधछात्रा अस्मिन निष्कर्षे प्राप्तः अस्ति यद वेदानां विश्वस्य प्राचीनंतमसाहित्येषु महत्वपूर्ण स्थानं अस्ति। वेदज्ञानस्य पर्यायः सन्ति आर्याणां जीवने तु वेदानां केन्द्रीयं स्थानं अस्ति तेषां जीवन सम्बन्धि समस्त गतिविधेया वैदिक ज्ञानस्य इतरततः भ्रमन् दृश्यते परम्परायाः अन्तर्गते- ब्रह्मा, मनु, याज्ञवलक्य, कपिल कषाद, गौतम, व्यास, जैमिनि इत्यादि महर्षिभिः वेदान् इश्वरेण निश्रितः ज्ञानं मन्यते।

वेदमन्त्रेषु निहित रहस्यान उद्घाटितुम समये-समये अनेक वेदभाष्यकाराणाम प्रादुर्भाव अभवत् यस्मिन प्रस्तुत शोधस्य ऽन्तर्गतः सायणा आचार्य, महर्षि दयानन्द, मैक्समूलरस्य वेदभाष्यानांउपरि प्रस्तुतशोध अध्ययने विचारं कृतं। ऐतेषां वेद भाष्य काराणाम प्रणालीकानां उपरि विचारं कुर्वन समये शोध छात्रा अस्मिन् निष्कर्षे प्राप्तः अस्तियद वेदानां वास्तविक रहस्यान् उद्घाटितुम महर्षि दयानन्दस्य निर्मिता योगिकवादी भाष्यपालिका सर्वाधिक उपयोगी अस्ति अतऐव प्रस्तुत शोधस्य अन्तर्गत महर्षि दयानन्दस्य दृष्टिकोणं समक्षं रक्षन् ऋततत्वस्य विभिन्न कोणेन अध यन करणस्य प्रयासं कृतवान्।

वस्तुतः चतुर्णाम् अपि वेदानां अवलोकनम् करणेन दार्शनिक महत्वस्य अनेकाः महत्वपूर्ण विचार तत्व समक्षं आगच्छन्ति ऐषां महर्षिणा स्ववेदभाष्यरस्य अन्यदऋग्वेदादि भाष्य भूमिका, सत्यार्थ प्रकाश संस्कार विधि इत्यादि विविध ग्रन्थेषु यथा प्रसंग उल्लेखित अस्ति। यस्मि ऋततत्व नामक दाशर्निक तत्वमपि प्रमुखरूपेण सम्मिलित अस्ति। स्व अध्ययन मननस्य विचारं कुर्वन मया एतद् प्राप्तः अस्ति यतः ऋत वेदानां मूल अवधारणा। दार्शनिक तत्वः अस्ति। यस्य वेद प्रवर्ति वैदिक साहित्ये अपि विकासः विस्तारः च अभवत्।

चत्वारेषु वेदेषु अनुमानेन विंशति सहस्त्र मन्त्राः सन्ति यस्मिन ऋग्वेदे अनुमानेन दश सहस्त्र मन्त्राः सन्ति। शेष दश सहस्त्र मंत्राः त्रिषु वेदेषु लभन्ते। वेदेषु ऋत नामक शब्दस्य संध ानं कुर्वन मया एतत् प्राप्तं यत् ऋत शब्दः अनेकेषु रूपेषु वेद मन्त्रेषु प्रयुक्तः अभवत्। यथा ऋत, ऋतम, ऋतेन, ऋतावा, ऋतजात, ऋतेजा, ऋतपाः, ऋत्विज, ऋतावान्, ऋतावरी इत्यादयः।

सम्यक् रूपे ऋतेन सम्बन्धितः उपर्युक्त शब्दाः ३०० बारं आगताः सन्ति। यस्मिन ऋग्वेदे ऋतस्य प्रयोगः सर्वाधिकं लभते। तदन्तरं अथर्ववेदस्य स्थानम् अस्ति। यजुर्वेदस्य पश्चाते सामवेदे अपि अल्पातअल्पं २२ बारं ऋत शब्दस्य प्रयोगःलभते। एतावत् अत्यधिक सन्दर्भेषु ऋतस्य प्रयोगः एनां धारणां बलं प्रदानं करोति यत् वैदिक ऋत एमा महत्वपूर्ण अवधारणा अस्ति। महर्षि दयानन्देन ऋत शब्दस्य कुर्वन, अस्य अनेकंदि अर्थवाचकतां सप्रमाणं स्थापित अस्ति। यस्मिन् केचन प्रमुख सन्दर्भाः अत्र निष्कर्ष रूपेण उल्लेखनीयाः सन्ति-

१. ऋत - सत्ये वाचक अर्थरूप १३ सन्दर्भाः

२. ऋत - सत्य ब्रह्मस्य २ सन्दर्भः

३. ऋत - सत्य प्रकाशकः एकः सन्दर्भः

४. ऋतेन उत्पन्नः एकः

५. ऋतस्य विभागकर्ता प्रकाशमानः एकः

६. सत्यस्य सदृशः आचरणः एकः

७. जलस्य सदृशः सत्यः एकः

अस्य अतिरिक्तं अपि- सत्य विद्या, सत्य अथवा जल सत्य धर्म, सत्य कारणु, सत्य, यथार्थ व्यवहार, सत्यास्य सदृशः आचरणः, सत्य विज्ञान, विद्या तथा विनयेन युक्तः न्यायः, यथार्थ योगाभ्यासः, अनेके अर्थाः ऋषि दयानन्देन ऋत शब्दस्य प्रयोग कृताः सन्ति। यस्मात् अस्मिन निष्कर्ष प्रापनीयं स्वभाविकं अस्ति।

१. ऋत शब्दस्य सत्यस्य अर्थे सर्वाधिकः प्रयोगः लभते।

२. सत्यस्य अपि अनेके प्रकाराः ऋषिं दयानन्दं ग्राहयः सन्ति- यथा- परमेश्वर, प्रवृति, सत्यस्वरूप, सत्यस्य प्रकाशकः, सत्येन उत्पन्नः सत्यस्य विभाकर्ता सत्यकारण, यथार्थ, सत्य विज्ञान, सत्य धर्म, सत्य वेद विज्ञान।

३. सत्येन अतिरिक्तः ऋत शब्दस्य प्रयोगः जलस्य कृते अपि महर्षिमृ ग्राघम अस्ति। अल्पात् अल्पं पञ्च सन्दर्भाः एतादृशाः लभन्ते यस्मिन् महर्षिना ऋतम् जलस्य अर्थे प्रयुक्तः अस्ति।

४. अस्मात् अतिरिक्तं अपि ऋषि दयानन्देन ऋत शब्दस्य प्रयोगः बर्हिस्थः वायुः कृते अपि कृतम् अस्ति।

ऋत शब्दस्य अनेक अर्थवाचकतायाः प्रस्तुत शोधे विवरणं यच्छन मया अस्य प्रश्नस्य अपरि विचारं कृतं अस्ति यत् कं अर्थं कस्मिन् सन्दर्भे ग्रहणीयम्। अस्य समाधानम् ऋत शब्दस्य व्युत्पत्तैः आधारे कृतं अस्ति। अनेन सह- सह वेद मन्त्रेषु आगत देवतया अपि अस्य निर्णयम् कुर्वन सहायतां लभते। वैदिक ऋत शब्दः गतयार्थकः अस्ति। येन, ज्ञान, गमन, प्राप्ति त्रयोऽपि अर्थाः यथा प्रसङ्गं ध्वनिताः भवन्ति।

ऋषि दयानन्दस्य वेदभाष्यस्य अध्ययनं कुर्वन समये मया एतद प्राप्तम यत् महर्षिना ऋत ऋत्वम् वैदिक दर्शनस्य विशिष्ट दार्शनिक तत्वस्य रूपे विवेचितं कृतं अस्ति। यद् मूलतः जगतस्य सर्वोच्च विधायक सत्ता परमेश्वरः तु अस्ति एव तेन माध्यमेन प्रकाशित वेद विद्या सनातन विधानस्य रूपे विचारणीयः अस्ति। तेन एव ऋत सत्तया सृष्टियक्र गतिशील तथा स्थिरः तिष्ठति। महर्षिणा स्व वेद भाष्ये ऋतस्य एतावत् समृद्ध अर्थः कृतः अस्ति यद् तस्य अन्तर्गते सृष्टि विधान, सामाजिक नियम, कर्मस्य प्रेरक निर्धारकः मानदण्डाः अपि आगच्छति। अन्यत् पारलौकिक जीवन लक्ष्यस्य साधक योग विद्यां अपि ऋतस्य रूपे ऋषि दयानन्देन स्व वेद भाष्ये यथा प्रसङ्गः विवेचितं कृतं अस्ति।

वस्तुतः जीवन जगति यद किपमि अस्ति दैवी विधान परिवर्तन एवं गत्याः स्थिर नियमः आदर्श इत्यादि सर्वेऽपि मूल सर्वधारक विद्धान्तस्य नियमाः ऋत तत्वस्य रूपे वेद मन्त्रेषु वर्णिताः सन्ति अन्यत् महर्षिम् स्वीकार्यम् अस्ति।

# संदर्भ ग्रन्थ सूची


1. अथर्ववेद, वैदिक मंत्रालय, अजमेर।
2. अद्वैतवाद (पं०) गंगाप्रसाद उपाध्याय, कला प्रिंटिंग प्रेस, इलाहाबाद।
3. अद्वैत सिद्धि-मधुसूदन सरस्वती-निर्णय सागर प्रेस, बम्बई।
4. आस्तिकवाद (पं०) गंगाप्रसाद उपाध्याय, कला प्रिंटिंग प्रेस, इलाहाबाद।
5. ईशोपनिषद्, गीताप्रेस, गोरखपुर।
6. उपनिषद् दर्शन का रचनात्मक सर्वेक्षण (रामचन्द्र दत्तात्रेय रानाडे), जयपुर।
7. उपनिषद् भाष्य (पं० आर्यमुनि), गोविन्दराम हासाराम, दिल्ली।
8. ऋग्वेदादिभाष्यभूमिका (ऋषि दयानन्द कृत) वैदिक मंत्रालय, अजमेर।
9. ऋग्वेद, वैदिक मंत्रालय, अजमेर।
10. ऋग्वेद संहिता-चतुर्थ और द्वितीय भाग, मैक्समूलर द्वारा संपादित चौखम्बा संस्कृत ग्रन्थमाला, वाराणसी-1966।
11. ऋग्वेद भाष्य भूमिका, सायण कृत।
12. एकादशोपनिषद् (हिन्दी भाषयम्) (सत्यव्रत सिद्धान्तालंकार), विद्याविहार, देहरादून।
13. एतरेय उपनिषद् आनन्दाश्रम, पूना।
14. कठोपनिषद्, गीताप्रेस, गोरखपुर।
15. केनोपनिषद् आनन्दाश्रम, पूना।
16. गीता, शंकर भाष्य गोरखपुर प्रेस, गोरखपुर।
17. छान्दोग्योपनिषद्, आनन्दाश्रम, पूना।
18. जीवात्मा (पं०) गंगाप्रसाद उपाध्याय, कला प्रिंटिंग प्रेस, इलाहाबाद।
19. जीवात्मा और पललोक (नारायण स्वामी) आर्य वानप्रस्थाश्रम, ज्वालापुर।
20. तैत्तिरीय उपनिषद् आनन्दाश्रम, पूना।
21. दयानन्द ग्रंथमाला, सार्वदेशिक सभा, दिल्ली।
22. न्याय दर्शन वात्स्यायन भाष्य।
23. निरूक्त (यास्काचार्य कृत) चौखम्बा विद्याभवन, वाराणसी।
24. न्याय कुसुमांजलि-उदयन-हरिकृष्ण दास, वाराणसी।
25. न्यायामृत-श्रीनिवासीय टीका- निर्णय सागर प्रेस, बम्बई।
26. न्यायामृत-व्यासराज-निर्णय सागर प्रेस, बम्वई।
27. प्रश्नोपनिषद्, गीताप्रेस, गोरखपुर।
28. बृहारण्यकोपनिषद, आनन्दाश्रम, पूना।

29. ब्रह्मसूत्र (विद्योदयभाष्यम) विरजानन्द वैदिक संस्थान, गाजियाबाद (उ०प्र०)।
30. ब्रह्मसूत्र शंकरभाष्य-निर्णयसागर प्रेस, बम्बई।
31. भारतीय नीतिशास्त्र का इतिहास (भीचानलाल आत्रेय), हिन्दी समिति, सूचना विभाग, उत्तर प्रदेश (लखनऊ)।
32. मुण्डकोपनिषद् गीताप्रेस, गोरखपुर।
33. माण्डूक्य उपनिषद, गीताप्रेस, गोरखपुर।
34. मनुस्मृति, गीताप्रेस, गोरखपूर।
35. यजुर्वेद दयानन्द भाष्य।
36. यजुर्वेद सायण भाष्य।
37. विवरण प्रमेय संग्रह (विद्यारण्य मुनि), हिन्दी अच्युत ग्रंथ माला काशी।
38. वैदिक देवता, उद्भव और विकास-डॉ० गयाचरण त्रिपाठी।
39. वेदकालीन समाज, डॉ० शिवदत्त ज्ञानी।
40. वैदिक सिद्धान्त मीमांसा।
41. वैदिक माइथोलॉजी-मैकडानल।
42. वेदों का यथार्थ स्वरूप- (पं० धर्मदेव विद्यामार्तण्ड), गुरूकुल कांगडी विश्वविद्यालय, हरिद्वार।
43. वेद रहस्य (श्री अरविन्द, अनुवादक अभय) पाण्डेचेरी।
44. वेदान्त दर्शन, निम्बार्कभाष्य-स्व० सन्तदास कृत वेदान्त सुबोधिनी सहित-द इण्डियन प्रेस, इलाहाबाद, 1985
45. श्वेताश्वेतरोपनिषद् आनन्दाश्रम, पूना।
46. सत्यार्थ प्रकाश (ऋषिदयानन्द कृत) वैदिक मंत्रालय, अजमेर।
47. सर्वदर्शन संग्रह (माधवचार्य कृत), चौखम्बा विद्याभवन, वाराणसी।
48. सामवेद, वैदिक मंत्रालय, अजमेर।
49. समकालीन दार्शनिक चिन्तन (हृदय नारायण मिश्र), किताबघर, कानपुर।
50. भारतीय दर्शन की समस्याएँ-एक समालोचनात्मक अध्ययन।
51. डॉ० जयदेव वेदालंकार गुरूकुल कांगडी विश्वविद्यालय, हरिद्वार।
52. कार्ल मार्क्स और ऋषि दयानन्द-डॉ० सोहन पाल सिहं आर्य।
53. दयानन्द दर्शन-डॉ० वेद प्रकाश गुप्त।
54. पातंजल योग सूत्र-महर्षि पतंजिल
55. चरक संहिता
56. योग सूत्र व्यास भाष्य- व्यास देव
57. सर्वदर्शन संग्रह- माधवाचार्य

